# आशुगरुड (आशुताक्ष्र्य) कवच स्तोत्रम्

विनियोग:

अस्य श्री आशुगरुड (आशुताक्ष्र्य) कवचस्य
शन्कर ऋषि: जगती छन्द: श्री आशुगरुड भैरव देवता
गां बीजं स्वाहा शक्ति:
मम सर्वाभीष्ट सिद्ध्यर्थे जपे विनियोग:

अथ करन्यास:

गां श्रीं अंगुष्ठाभ्यां नम:
गीं श्रीं तर्जनीभ्यां नम:
गूं श्रीं मध्यमाभ्यां नम:
गैं श्रीं अनामिकाभ्यां नम
गौं श्रीं कनिष्ठिकाभ्यां नम:
ग: श्रीं करतल करपृष्ठाभ्यां नम:

अथ हृदयादिन्यास:

गां श्रीं हृदयाय नम:
गीं श्रीं शिरसे स्वाहा
गूं श्रीं शिखायै वषट्
गैं श्रीं कवचाय हुम्
गौं श्रीं नेत्रत्रयाय वौषट्
ग: श्रीं अस्त्राय फट्

अथ ध्यान मन्त्र:

आजानोस्तप्तहेम प्रभममलमय प्रख्मानाभि तस्मात्
आकर्णकुंभमाभं भ्रमरकुलमिव श्याममामूर्ध्व केशम् ।

ब्रह्माण्डं व्याप्तदेहं द्विभुजमभिवरैः भूषणैर्भूषितांगम्
पिंगाक्षं तीक्ष्णदंष्ट्रं वरदमभयदं तार्क्ष्यमुग्रं नमामि ॥

श्री शिव उवाच

साधुदेवी महाप्राज्ञे ज्ञानं वक्ष्यामि शंकरि ।
आशुतार्क्ष्यस्य कवचं महामन्त्रं वदाम्यहम् ॥
भोगमोक्षदं अज्ञानतिमिरान्धस्य तौलिकम् ।
भुक्तिमुक्तिप्रदं श्रेष्टं सिद्धिदं सर्वसिद्धिदम् ॥
ऋषिन्यास प्रभावाश्च शंकरादिति मन्त्रवित् ।
समाहितेन मनसा जपेन्मन्त्रोत्तमोत्तमम् ॥

अथ कवच स्तोत्रम्

तार्क्ष्यो मे पुरतः पातु गरुडः पातु पुष्टतः ।
सोमः पातु च मे वामं वैनतेयस्तु दक्षिणम् ॥ 1 ॥

शिखायां गरुडः पातु निटिलं त्वहिसन्धरः ।
नासिकाग्रं विभुः पातु नयने विनुतासुतः ॥ 2 ॥

तेजिष्ठः श्रोत्रयोः पातु मुखं सन्तापमोचनः ।
ओष्ठयोः पातु नागारिः पातु तालु प्रजाकरः ॥ 3 ॥

जिह्वां खगेश्वरः पातु दन्तान् पात्वरुणानुजः ।
सीरुकश्चिबुकं पातु पातु चोग्रः कपोलयोः ॥ 4 ॥

मगारिहा गलं पातु चांसयोः कृतिविक्रमः ।
करौ पातु च रक्ताक्षः कराग्रे तु महाबलः ॥ 5 ॥

अन्गुष्ठौ च हरिः पातु तर्जन्यौ हरिवाहनः ।
मध्यमे सुमुखः पातु चानामिके त्रिलोचनः ॥ 6 ॥

कनिष्ठिके महोत्साहः स्वात्मान्गः पातु दोः स्तनम् ।
करपृष्ठं कलातीतो नखान्यमृत सन्धरः ॥ 7 ॥

हृदयं पातु सर्वज्ञः कुक्षे पक्षिविराट ततः ।
उरःस्थलं कलावारः पातु मे जठरं परम् ॥ 8 ॥

परात्परः कटिं पातु पातु नाभिं हरिप्रियः ।
गुह्यं पातु मनोवेगः जघनं खगपद्मजः ॥ 9 ॥

जितेन्द्रियो गुदं पातु मेढ्रं सन्तानवर्धनः ।
ऊरु पशुपतिः पातु जानुनी भक्तवत्सलः ॥ 10 ॥

जन्घे पातु वषट्कारः सर्वलोकवशन्करः ।
गुल्फौ नीलशिरः पातु पादपृष्ठं मुरारिधृक् ॥ 11 ॥

धीरः पादतलं पातु चान्गुलीः परमन्त्रतुत् ।
रोमकूपाणि मे पातु मन्त्रबन्धिविमोचकः ॥ 12 ॥

स्वाहाकारस्त्वंच पातु रुधिरं वेदपारगः ।
साक्षिकः पातु मे मांसं मेदांसि पातु यज्ञभुक् ॥ 13 ॥

सामगः पातु मे चास्थि शुक्रं तु हविवर्धनः ।
शोभनः पातु मे मज्जां बुद्धिं भक्तवरप्रदः ॥ 14 ॥

मूलाधारं खगः पातु स्वाधिष्ठानमथात्मवित् ।
मणिपूरकमत्युग्रः कलधी  पात्वनाहतम् ॥ 15 ॥

विशुद्धिमपरः पातु चाज्ञामाखंडलप्रियः ।
दृतताक्ष्यो महाभीमो ब्रह्मरन्ध्रं स पातु मे ॥ 16 ॥

ऐन्द्रं फणिभुजः पातु आग्नेयं कलिदोषभित् ।
याम्यं लघुगतिः पातु नैर्ऋतं सुरवैरिजित् ॥ 17 ॥

पश्चिमं पातु लोकेशो धौतोरुः पातु मारुतम् ।
गुलिकाशीति कौवेरं पातु चैशान्यमौजसः ॥ 18 ॥

ऊर्ध्वं पातु सदानन्द गीत नृत्यप्रियस्तथा ।
गरुडः पातु पातालं गरलाक्षी तनुं तथा ॥ 19 ॥

धनं धान्यादिकं पातु ताक्ष्यों राक्षसवैरिधृक् ।
भीषणः कन्यकाः पातु भार्यामग्निकणेक्षणः ॥ 20 ॥

त्वरितः पातु चात्मानं धर्मकर्म कृतोत्तमः ।
पुत्रनायुष्करः पातु वंशं रिपुनिषूदनः ॥ 21 ॥

सन्ग्रामे विजयः पातु माग्रं शत्रुविमर्दनः ।
सिद्धिं पातु महादेवो भगवान भुजगासनः ॥ 22 ॥

सततं पातु मां श्रेष्ठं स्वस्तिदः साधकात्मवान् ।
जाग्रत्स्वप्नसुषुप्तौ च कुन्कुमारुणवक्षसः ॥ 23 ॥

सर्वसंपत्प्रदः पातु स्तुतिर्मन्त्रस्य सिद्धिषु ।
इदं तु ताक्ष्यकवचं पुरुषार्थप्रदं परम् ॥ 24 ॥

स्वस्तिदं पुत्रदं सर्वरक्षाकरं अनुत्तमम् ।
युद्धे वह्निभये चैव राज चोर समागमे ॥ 25 ॥

महाभूतारिसन्घट्टे निजपेत् कवचं शिवे ।
स्मरणादेव नश्यन्ति प्रचन्डानलतूलवत् ॥ 26 ॥

आशुताक्ष्यास्य कवचं परमं पुण्यवर्धनम् ।
महागुह्यं महामन्त्रं महामोहन सन्ज्ञकम् ॥ 27 ॥

सर्वदेवमय मन्त्रं सर्वायुधकरं परम् ।
सर्वमृत्यु प्रशमनं सर्वसौभाग्य वर्धनम् ॥ 28 ॥

पावनं परमायुष्यं पाप पाश प्रमोचनम् ।
मुनीश्वरैश्च यमिभिःर्नाभिजाद्यमरैः परैः ॥ 29 ॥

गुह्यकैश्च सुरश्रेष्ठैः स्तूयमानं  महोज्ज्वलम् ।
त्रिकालं प्रजपेद् ध्यानपूर्वकं कवचं शिवे ॥ 30 ॥

सहसा सर्वसिद्धिः स्याद्वाग्विभूतिर्विशेषतः ।
मुनीनामपि संपूज्यः कवचेनावृतः पुमान् ॥ 31 ॥

चतुर्दशसु लोकेषु  सन्चरेन्मारवतु सः ।
अनेनैव तु कायेन भूतले बहुसंपदम् ॥ 32 ॥

चिरं प्राप्य तु देहान्ते विष्णुसायुज्यमाप्नुयात् ॥ 33 ॥

शिखि ऋतु वसु कोणं चाष्टपत्रं भुवं च ।
क्रतु शत शशिचाग्निं भास्कर व्योमकं च ॥ 34 ॥

सकलमनिलयुक्तं तद्बिहिः साध्यशक्तिम् ।
धृत मृत सुत वन्ध्या पुत्रदं ताक्ष्र्यमेतत् ॥ 35 ॥

इदं चक्रं महाख्यातं सर्ववक्त्रोक्तमुत्तमम् ।
महागुह्यं महाभीमं महासिद्धिकरं परम् ॥ 36 ॥

शुक्रवासरमारभ्य पूज्य जप्त्वा दिनत्रयम् ।
अनेन कवचेनैव जपेदष्टोत्तरं शतम् ॥ 37 ॥

तज्जलेनाभिषिन्च्याथ होमं कृत्वा हि रुक्षकैः ।
निमज्जतां जले देवि बन्धयेत् पुत्रकामिनाम् ॥ 38 ॥

॥ इति श्री आकाशभैरवकल्पे आशुगरुड (आशुताक्ष्र्य) कवच स्तोत्रं संपूर्णम् ॥